श्रीगणेशायनमः॥ नन्वीश्वरेच्छारूपस्य वाच्यत्वस्य गुणत्वादिसमवायित्वात् समवायित्वंनतद्व्यधिकरणधर्म इत्यत आह वाच्यत्व-
मिति अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छाविषयत्वं पदार्थान्तरं वाच्यत्वंनतुताद्दशेच्छामात्रमति प्रसक्तत्वात् नच नञस्यापि स-

समवायितयेतिवाच्यत्वंनयथासमवायितथावक्ष्यते घटादिसमवायितयेत्यर्थः इत्यप्याहुः प्रमेयसाध्यके
चभावत्वेनाभावानां अभावत्वेनभावानां वह्नित्वेननिर्वह्नौ अवृत्तिमात्रवृत्तिगगनत्वादिनाविरुद्धघटत्वपटत्वा
भ्यांचसर्वत्रप्रमेयमात्रस्याभावः सुलभः ननुपारिभाषिकमेवाव्यभिचरितत्वंतथाहियत्समानाधिकरणाः
साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकायावन्तोभावाः प्रतियोगिसमानाधिकरणास्त
त्वंसर्वत्रवाच्यत्वाद्यभावस्यतथात्वाद्यावत्त्वोपादानम् अतएवभूतत्वमूर्तत्वोभयवान्मूर्तत्वादित्यादौहेतावव्हि
त्वाभावस्यप्रतियोगिसामानाधिकरण्येऽपिभूतत्वमनोन्यत्वाद्यभावस्य तथात्वान्नातिप्रसंगः साधनस
नाधिकरणस्यगोत्वाद्यभावस्यतत्तत्साध्यव्यक्त्यभावस्यचातथात्वात् साध्यतावच्छेदकेत्यादियेनसंबंधेन
तुः तेनैवतदधिकरणंबोध्यंतेनात्मत्वेसाध्येसमवायेनहेतोर्ज्ञानस्यविषयतयाधिकरणे घटादौव्
भावस्यातथात्वेपिनक्षतिः एवंदलांतरेपिसंबधभेदनिबंधनोदोषः संबंधेक्यविवक्षयानिरसनं
सामान्याभावसाध्येपृथिवीत्वादिकंसद्धेतुरेवप्रलयेपरमाणावुत्पत्तिकालेचावयविनितत्सत्वात् न
नध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वेमानाभावात् अतएवअंतराश्यामेरक्तरूपंनास्तीतिप्रत्य

मवायीतिभावः समवायितयेती मूलस्यसमवायिकारणतयेत्यर्थइत्यप्याहुः नन्विदंवाच्यंज्ञेयत्वादित्यादौ ग

त्वाभावरूपस्यसाध्याभावस्यप्रसिद्धावपिप्रमेयवान्वाच्यत्वादित्यादिकेवलान्वयिनितदप्रसिद्धेरनुद्धारात् मूलस्यन्यूनत्वमतआह
प्रमेयेति भावत्वेनाभावानामभावः सर्वत्रसुलभइत्यन्वयः ननुभावत्वेनाभावोनास्तीतिप्रतीतिरभावस्येवाभावत्वेनभावोनास्तीति

त्किमध्वंसाद्यवगाहीपूर्वोपरस्त्किमध्वंसप्रागभाववति रक्तेऽपि तथाप्रत्ययप्रसंगात् नतत्सामानाधिकरण्यंचस्वविशि
ष्टहेत्वधिकरणावच्छेदेनबोध्यंतेनगोत्वजन्यद्रव्यत्वप्रलयावृत्तित्वादिनागवादेरभावस्यगवाद्यनधिकरणधर्म्यवच्छे
देनतद्वृत्तिकालेमहाकालेवावृत्तावपियदागोत्वंतदागोर्यत्रकालत्वतत्रजन्यद्रव्यप्रलयावृत्तिर्वेत्यादौनातिप्रसंगः हेतु
मतिप्रलयेनतत्सामानाधिकरण्याभावात् स्वविशिष्टेतिविशेषणात् कपिसंयोगाभाववान् मेयत्वादित्यादौसंयो
गाद्यात्मकस्यसाध्याभावस्यसकलहेत्वधिकरणावृत्तित्वेऽपिनाव्याप्तिः जलादिवृत्तित्वविशिष्टगोत्वाद्यभावस्याभा
वस्तुजलत्वाद्यभावोनतुधूमाद्यभावो जलादिवपितदभावप्रत्ययप्रसंगात् यत्समानाधिकरणानांसाध्यतावच्छे
दकावच्छिन्नप्रतियोगिताकानां यावदभावानांप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यंतत्त्वंवातत्त्वेयत्व
त्वादिनावाच्यत्वादीनामभावः सुलभएव शेषदर्शितदिशावसेयमतआह प्रतीयोग्यवृत्तिश्चेति केचित्तुव्या
प्यवृत्तेर्हेतुसमानाधिकरणसाध्याभावस्यप्रतियोगितायाअनवच्छेदकंहेतुसमानाधिकरणस्यव्याप्यवृत्तेः प्रति
योगिव्याधिकरणस्यवा अभावस्यप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत्साध्यतावच्छेदकंतदव

प्रतीतिर्भावस्येवप्रतियोगित्वमवगाहते नचैतावताप्रमेयमात्रप्रतियोगिकाभावसिद्धिरतआह वन्हित्वेनेति वन्हित्वेननिर्वन्होसर्वेष
मभावः सुलभइतियोजना ननुजलेवन्हित्वेनप्रमेयंनास्तीतिप्रतीतिर्वन्हिमात्रप्रतियोगिकाभावमवगाहते नतुप्रमेयसामान्यप्रतियो

गिकवह्निमतिवादिशप्रतीत्यनुपपत्त्या वह्निप्रतियोगिकाभावावगाहित्वस्यावश्यकत्वादत आह अवृत्तीति तथाचगगनत्वेनप्रमेयंना
स्तीतिप्रतीत्यैवप्रमेयसामान्यप्रतियोगिकाभावसिद्धेः नहितत्रापिगगनमात्रप्रतियोगिकत्वभासनं इतिवक्तुंशक्यते विनिगमनाभावे

च्छिन्नसामानाधिकरण्यंव्याप्तिः एवंचव्याप्तेरव्यभिचारिसंबंधरूपतापिसंगच्छते हेतौसाध्यतावच्छेदकावच्छिन्न
साध्याभाववद्वृत्तित्वस्यैवसाध्यतावच्छेदके हेतुमन्निष्ठसाध्याभावप्रतियोगितावच्छेदकत्वस्यापिव्यभिचारत्वात् अव
च्छेदकत्वंचेह तत्पर्याप्त्यधिकरणत्वं तेनविशिष्टनत्त्वाभावस्य ह्रदत्ववह्नित्वोभयावच्छिन्नाभावस्यच प्रतियोगिताव
च्छेदकत्वेऽपिवह्नित्वस्यनक्षतिः सत्तावतिगुणादौसंयोगाद्यभावोऽपिव्याप्यवृत्तिर्वक्ष्यमाणेवाप्रतियोगितावच्छे
दकानतिरिक्तवृत्तित्वमेव तदवच्छेदकत्वमिहापिबोध्यम् भवतिचगुणत्वगुणावृत्तितद्द्रव्यमात्रसमवेतत्वाद्यवच्छिन्न
प्रतियोगिताकव्याप्यवृत्त्यभावप्रतियोगितावच्छेदकगुणत्वाद्यनतिरिक्तवृत्त्येवसंयोगत्वमित्याहुः साध्यतावच्छेद
कावच्छिन्नसाध्यसामानाधिकरण्यावच्छेदकस्वसमानाधिकरणसाध्याभावत्वकत्वं यत्सामानाधिकरण्यं साध्या
भावप्रमायां साध्यवत्ताज्ञानप्रतिबंधकत्वमास्तितस्यं वाव्याप्तिरितितुनयुक्तं सर्वत्रसाध्याभावपदवैयर्थ्यात् य
त्तुसाध्याभाववति यद्वृत्तौप्रकृतानुमितिविरोधित्वं नास्तितत्त्वंव्याप्तिरितितन्न अनुमित्यविरोधित्वज्ञानस्या
नुमितिजनकत्वेसाध्याभाववद्वृत्तित्वज्ञानस्यानुमित्यविरोधितया व्यभिचारिण्यतिप्रसंगात् केचित्तुयावंतःसा
ध्याभावाः प्रत्येकंतत्तत्सजातीयायेतत्तदधिकरणवृत्तित्वाभावास्तद्वत्त्वं तत्त्वम् साजात्यंचसमानासमानाधि

नप्रमेयमात्रप्रतियोगिकत्वावगाहनेबाधकाभावात् कालिकसंबंधेनगगनत्वादिविशिष्टस्यप्रमेयस्यसर्वत्रनाभावः संभवतीत्यतउ-

क्तं अव्याप्तिमात्रवृत्तीति तथाच यादृशसंबंधेनगगनत्वादेर्वृत्तिमद्वृत्तित्वं तादृशसंबंधावच्छिन्नावच्छेदकताप्रतियोगिताकोगग
नत्वादिनाप्रमेयसामान्याभावोवाच्यइतिभावः ननुकालिकसंबंधेनप्रमेयसाध्यकेतेनसंबंधेनसाध्याभावस्यैवप्रसिद्धिः कार्यसा

करणधर्म्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेणसाध्याभावश्चपूर्वोक्तद्वितीयरीत्याप्रत्येतव्योव्याप्यवृत्तिस्व
प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणोवातेनतत्तत्साध्यव्यक्तेरव्याप्यवृत्तेर्वासाध्यस्याभाववतिवृ
त्तावपिहेतोर्नाव्याप्तिः तद्वृत्तित्वाभावश्चतत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकव्यासज्यवृत्तिधर्मावच्छिन्नप्रति
योगिताकोबोध्यः तेनसाध्याभाववद्व्यक्तिविशेषवृत्तित्वस्यपार्थिवत्वादिविशेषितस्यद्वित्वाद्यवच्छिन्नस्यवासा-
ध्याभाववद्वृत्तित्वस्याभावमादायनातिप्रसङ्गः अत्रचहेतुतावच्छेदकसंबंधेनसाध्याभाववद्वृत्तित्वंबोध्यं तेनव
ह्न्यभाववतिस्वावयवेधूमस्यवृत्तावपिनदोषः इत्थंचसाध्याभावोऽपिहेतुतावच्छेदकसंबंधेनकस्यचिदधिकरणे
वर्तमानोग्राह्यः तेनजातिमान्सत्वादित्यादौहेतुतावच्छेदकसंबंधेनसाध्याभाववद्वृत्तित्वस्याप्रसिद्धावपिनक्ष-
तिः यद्वायावन्तस्तादृशाः साध्याभावाः प्रत्येकंतेषांसजातीयस्यव्यापकीभूतस्यव्याप्यवृत्तेरभावस्यप्रतियोगि
तावच्छेदकेन धर्मेणयद्रूपावच्छिन्नप्रतिव्यापकत्वमवच्छिद्यतेतद्रूपवत्त्वंतत्त्वंसाधनस्यतादृशाभावप्रतियोगित्व
तदवच्छेदकत्वंवासाधनतावच्छेदकस्येतितुनवक्तव्यम् द्रव्यंसत्वादित्यादौसत्वादेर्गुणकर्मान्यत्वविशिष्टसत्वात्वा
द्यवच्छिन्नप्रतियोगिताकतादृशाभावप्रतियोगित्वादतिव्याप्तेः ज्ञेयंप्रमेयादित्यादौप्रमेयत्वादेस्तादृशप्रतियोगिता-

चकालिकसंबंधेन गगनत्वेनप्रमेयं नास्तीतिप्रतीत्यानसंभवति तत्संबंधेनगगनादेर्वृत्तिमत्वमतेतादृशप्रतीतेर्गगनप्रतियोगिकत्वावगा

हितयैवोपपत्तौ प्रमेयांतरप्रतियोगिकत्वे मानाभावादत आह विरुद्धेति तथाच घटत्वपटत्वाभ्यां प्रमेयं नास्तीति प्रतीत्या निखिलप्र
मेयप्रतियोगिकस्तत्राप्यभावः स्फुलभ इति भावः इदमुपलक्षणं संयोगादिसंबधेन घटत्वादिकमपि प्रमेयत्ववदवृत्तिइति तत्संबंधेन-

नवच्छेदकत्वादव्याप्तेश्च प्रमेयत्वव्यधिकरणप्रतियोगित्वस्याप्रसिद्धेः यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं
तत् प्रयोगितावच्छेदकेनधर्मेण यद्रूपावच्छिन्नप्रतिव्यापकतामवच्छिद्यते तद्रूपवत्ववातत्वमित्याहुः परेतु वृत्तिम
द्वृत्ययो यावन्तः साध्याभाववद्वृत्तित्वाभावास्तद्धत्वं व्याप्तिः येन संबंधेन हेतुता तेनैव वृत्तिमत्वमपि बोध्यं तेनव्यधिक
रणधर्मावच्छिन्नवन्ह्यभाववति संयोगेन यावृत्तिस्तदभावस्य जात्यादौ वर्तमानस्य धूमादावसत्वेऽपि न क्षतिः सा
ध्याभावश्च पूर्ववद्बोध्यः तद्वृत्तित्वाभावोपिस्वव्यापकतत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकः तत्त
त्साध्याभाववद्वृत्तित्वत्वातिरिक्तेन समानाधिकरणेन साध्याभाववद्वृत्तित्ववृत्तिना धर्मेणानवच्छिन्नप्रतियोगिताको
बोध्यः तेनालोकाद्यवृत्तित्वेन रूपेण योवन्हिसामान्याभाववद्वृत्तित्वस्य यश्चेन्धनत्वाद्यवच्छिन्नवन्ह्यभावाधिकरणी
भूतमहानसवृत्तित्वादेरभावस्तस्य धूमादौ स्वनिष्ठसाध्याभाववद्वृत्तित्वविरहस्य च हेत्वंतरसत्त्वेः स्वास्मिन्नसत्व-
पि न क्षतिरित्याहुः अन्येतु वृत्तिमद्वृत्तयो यावंतः साध्याभावसमुदायाधिकरणवृत्तित्वाभावास्तद्धत्वं तादृशवृत्तित्वा
भावश्च स्वव्यापकतादृशवृत्तित्वत्वव्यापकप्रतियोगिताको बोध्यः प्रयोजनं चोक्तप्रायम् साध्याभावाधिकरणवृत्ति
त्वत्वव्यापकप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नस्यैवाभावस्य वृत्तिमद्वृत्तित्वाद्यभिचारिण्यतिव्याप्तिरतः स-

घटत्वाद्यवच्छिन्नप्रतियोगिताकप्रमेयसामान्याभावोपि बोध्यः अप्रसिद्धिदोषस्यापि सत्वान्मूले प्रतियोग्यवृत्ति इत्यादि दोषांतरं किमित्युपा-

तमतस्तद्वत्तारार्थं साशंकते नन्विति पारिभाषिकमेवेत्येवकारेणनव्यभिचारोऽव्यभिचारइतियोगार्थो व्यवच्छिद्यते अव्यभिचरित-
त्वमिति अथेदंवाच्यमित्यादिग्रंथाभिप्रेतमिति शेषः तथाचनचैवं घट इत्यादि मूलस्य केवलान्वयिनो व्यभिचरितत्वेनालक्ष्यताप्रदर्शनपरत्वा-
त्पूर्वमूलसंगतिरितिध्येयम् यदित्यादि अत्रयत्समानाधिकरणा इत्यस्यानुक्तौ साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगि-
ताकस्यात्मत्वसामान्याभावस्यापि यावदंतर्गतत्वात्तस्यच व्यापकताघटकसमवायसंबंधेन प्रतियोग्यधिकरणकेनापि संबंधे तावृत्तित्वाद-

सुद्रूपेति साध्याभावश्चसाध्यतावच्छेदकसंबंधेनबोध्यः तेनसमवायेनवन्हेः साध्यत्वे धूमे संयोगेनचतथातोव-
न्ह्यवयववत्वे पर्वतवन्ह्यवयव संयोगेचपर्वतस्यवन्ह्यवयवस्यचसंबंधद्वयावच्छिन्नवन्ह्यभावद्वयानधिकरणत्वेति-
नातिव्याप्तिः तथास्वव्यापकीभूतसाध्यतावच्छेदकव्यापकप्रतियोगिताकोऽपिबोध्यः तेनयत्रपृथिवीत्वाभावादौ
साध्ये तत्राहि पक्षावृत्तित्वाद्यवच्छिन्नप्रतियोगिताकाभावकूटाधिकरणमप्रसिद्धम् तत्रसद्धेतौ पृथिवीत्वादौ
साध्ये जातित्वाद्यवच्छिन्नाभाववतिसामान्यादाववर्तमानद्रव्यत्वप्रकारकप्रमाविषयत्वादौचनाव्याप्तिरितिव्या-
प्तिर्वाताप्यभावत्वादिना अभावादौसाध्येतत्तत्साध्याभावकूटाधिकरणाप्रसिद्ध्या अव्याप्तिरित्याहुस्तन्नद्रव्यत्वे

यमात्माज्ञानादित्यादाववव्याप्तिरतस्तदुपात्तमित्यग्रेस्फुटीभविष्यति नचात्मत्वाद्यभावोपिसमानकालीनत्वादिसंबंधेनप्रतियोग्यधि-
करणवृत्तिः तथाविधसंबंधानांवृत्त्यनियामकत्वात् क्वचिदपितेनसंबंधेनवृत्तित्वाप्रतीतेः इत्थंचहेतुसमानाधिकरणत्वमपिहेतुता-
वच्छेदकसंबंधेनहेत्वधिकरणाधेयत्वंग्राह्यं तेनात्मत्वाद्यभावस्यापिहेत्वधिकरणसंबंधित्वान्नोक्तदोषतादवस्थ्यम् नचहेतुस-
मानाधिकरणा इत्यपहाय साध्यसमानाधिकरणायावंतस्तादृशाभावाः सविशिष्टयद्धर्मावच्छिन्नहेत्वधिकरणावच्छेदेनप्रतियोगि-

समानाधिकरणास्तद्धर्मवत्त्वमित्येव कुतो लक्षणं नकृतमिति वाच्यं द्रव्यमात्मत्वादित्यादौ महाकाले साध्यसमानाधिकरणद्रव्यत्वा-
दिसामान्याभावस्य सर्वविशिष्टहेत्वधिकरणाप्रसिद्ध्या तत्राव्याप्तिप्रसङ्गात् दैशिकविशेषणतासंबंधेन साध्याधिकरणवृत्तित्वोक्तौ च
गौरवात् यत्तु यत्समानाधिकरणा यावन्तस्तादृशाभावाः साध्यसमानाधिकरणास्तत्त्वमित्येवास्तु लक्षणं स्वस्वप्रतियोगिसामानाधि-
करण्यस्य प्रवेशे बीजाभावादिति तत्तुच्छं तथासति यत्समानाधिकरणा यावन्तोऽभावाः साध्यसमानाधिकरणास्तत्त्वमित्यस्यै

थिवीत्वोभयवान् द्रव्यत्वादित्यादौ तदुभयान्यतरत्वावच्छिन्नाभाववति द्रव्यत्वादेरवृत्तेरतिव्याप्तेः अपिचेदं पृथि-
व्यन्यद्रव्यत्ववत् द्रव्यत्वादित्यादौ द्रव्यत्वत्वावच्छिन्नाभावकूटाधिकरणगुणाद्यवृत्तित्वस्य द्रव्यत्वे सत्त्वादति-
व्याप्तेः द्रव्यत्वत्वाद्यवच्छिन्नप्रतियोगितायाः पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वसमव्याप्तत्वात् किंच रूपाभाव-
साध्यके सद्धेतौ साध्याभावसमुदायनिविष्टसकलरूपव्यक्त्यधिकरणाप्रसिद्धेः यावतामभावानामैकाधिकर-
ण्यं तावतां समुदाये विवक्षितेपीदं पृथिवीवृत्तिगुणशून्यसत्तान्यपृथिवीसमवेतशून्यं वा वायुत्वाद्रूपवदन्यत्वा-
द्वेत्यादावतिव्याप्तिः तत्रसादृशसाध्याभावस्तोमस्यानियमतो रूपादिघटितत्वेन तद्वृत्तिनद्धेतोरवृत्तेः वस्तुतोनि-

वसरयत्के साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका इत्यस्य व्यर्थतापत्तेस्तन्मात्रोक्तौ च विनापि व्यधिकरणधर्माव-
च्छिन्नाभावलक्षणसंभवे प्रतियोग्यवृत्तिश्चेत्यादेरवतारकृत्यानुपपत्तिः यदपि यत्समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकता-
वच्छेदकप्रतियोगिताका यावन्तोऽभावा दैशिकविशेषणतयोभयवृत्तयस्तत्त्वमित्येव लक्षणमस्तु स्वस्वप्रतियोगिसामानाधिकरण्यांतर्भावे गौ-
रवात् हेतुसमानाधिकरणस्य तत्तदयोगोलकान्यत्वाभावस्यैव दैशिकविशेषणतयोभयवृत्तित्वाभावाद्धूमवान्वह्नेरित्यादावतिव्याप्ति

विरहादितितन्मंदं हेतुसमानाधिकरणस्यवन्हिसयोगाद्यात्मकाभावस्यदैशिकविशेषणतयोभयवृत्तित्वविरहेणवन्हिमान्धूमादि-
त्यादावव्याप्तिप्रसंगात् नचभावभिन्नस्यैवहेतुसमानाधिकरणाभावस्यप्रवेशान्नैषदोषः नतद्घटभिन्नंघटत्वादित्यादावतिव्याप्त्याप-
त्तेः तद्घटभिन्नत्वाद्यभावस्यतद्घटत्वादिस्वरूपत्वेनभावत्वात् पटत्वादिनातद्घटभिन्नत्वाद्यभावस्यचोभयवृत्तित्वादिति अत्रच-
हेतुसमानाधिकरणायावंतस्तादृशाभावाः स्वप्रतियोगिसत्तागृहविरोधिताघटकसंबंधेनोभयवृत्त्यन्यस्तत्वमितिकृतेनकाप्यनुपपत्ति
रित्यलंपल्लवितेन अत्रचयत्पदंयद्धर्मावच्छिन्नपरं अग्रेचत्वमित्यत्रहेतुतावच्छेदकीभूततद्धर्मवत्वमित्येवार्थः तेनसकलधूमव्यक्त्य

खिलानामेवरूपाणांतादृशाभावसहस्रसमानाधिकरणत्वात्समानाधिकरणयावदभावादिकरणाप्रसिद्धिर्दु-
र्वारैव. किंचहेतुतावच्छेदकसंबंधेनयासाध्याभाववतिवृत्तिस्तदभावोवक्तव्यः अन्यथाधूमादावव्याप्तिः साध्य
तावच्छेदकसंबंधेनसाध्याभाववतिकालादौवृत्तिमन्मात्रस्यैववृत्तेर्व्यभिचारिण्यतिप्रसंगोवातथाचसत्ताधिसा
ध्यकेसंयोगेनसमवायेनवाहेतावव्याप्तिः साध्याभाववतितेनसंबंधेनवृत्तेरप्रसिद्धेः साधनसमानाधिकरणत्वेन

नुगतायावन्हिव्याप्तेर्नोलाभः नवात्तानेवात्मनोन्योत्वेसति आत्ममनःसंयोगादित्यादौमनसिहेतुसमानाधिकरणस्यात्मत्वस्य-
सामान्याभावस्यस्वविशिष्टहेतुतावच्छेदकावच्छिन्नहेत्वधिकरणाप्रसिद्धिनिबंधनाव्याप्तिः यत्तुद्रव्यगुणकर्मान्यत्वेसतिसत्त्वादि-
त्यादौहेतुसमानाधिकरणस्यद्रव्यत्वाद्यभावस्यातथात्वादव्याप्तिरतोयत्पदस्ययद्धर्मावच्छिन्नपरत्वमितितन्नद्रव्यत्वाद्यभावस्या-
पिकालिकादिसंबंधेनस्वविशिष्टयद्धेतुतावच्छेदकावच्छिन्नहेत्वधिकरणजन्यद्रव्यादितदवच्छेदेनप्रतियोगिसामानाधिकरण्यात्तत्रा
व्याप्तिविरहात् साध्यतेत्यादिसाध्यतावच्छेदकावच्छिन्नवन्हिष्ठाभावप्रतियोगितानादृशाभावाइत्यर्थः अत्रचविशिष्टसत्तावान्

जानेरित्यादौ विशिष्टसत्तात्वावच्छिन्नाभावस्यैव सत्तास्वरूपसाध्यव्यापकतावच्छेदकप्रतियोगिताकतया तस्य स्वविशिष्टहेत्वधि-
करणावच्छेदेन प्रतियोगिसामानाधिकरण्यादतिव्याप्तिरतः साध्यतावच्छेदकावच्छिन्नेति तथा च द्रव्यत्वाद्यभावस्यैव निरुक्तयावदन्तर्ग-
तस्य तथात्वान्नातिव्याप्तिः साध्यवत्त्वं चात्र साध्यतावच्छेदकसंबंधेन निवेश्यं तेन वस्तुमात्रस्यैव विषयतासंबंधेन ज्ञानवत्त्वाद् घटत्वादिना
वाच्यत्वाभावस्यैव साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वेपि समवायेन ज्ञानस्य साध्यत्वे द्रव्यत्वादिहेतौ नातिप्र-
संगः समवायसंबंधावच्छिन्नज्ञानवन्निष्ठाभावप्रतियोगितानवच्छेदकप्रतियोगिताकस्यात्मत्वाभावस्यैव प्रतियोगिसमानाधिकरण-

**साध्याभावाविशेषणीया इति चेद्विशेष्यतां तथापि भूतत्वमूर्तत्वाद्योरन्यतरत्वेनाभावे साध्ये स्पर्शवदन्यत्वादा
वतिव्याप्तिः तादृशसाध्याभावसमुदायवति पृथिव्यादौ तस्यावृत्तेः किंच महाकालान्यत्वादिसाध्यके व्यभि-
चारिणि कालिकविशेषणाहेतावतिव्याप्तिः तादृशसाध्याभावसमुदायवति महाकाले तेन संबंधेन वृत्तिमन्मात्र
स्यैव वृत्तेः एतेन साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकव्याप्यवृत्तित्वसमा**

त्वात् अत्र च साध्यवन्निष्ठाभावः प्रतियोगिव्यधिकरणत्वेन विशेषणीयः तेन साध्यवन्मात्र एव समवायित्वावच्छिन्नवाच्यत्वाभा
वप्रतियोगित्वेन घटाद्यभावस्य सत्त्वेपि न साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकप्रतियोगिताकाभावस्याप्रसिद्धिः इत्थं तत्संबंधेन
स्वावच्छिन्नावधिकरणसाध्यवन्निष्ठाभावप्रतियोगितावच्छेदको यो यस्तदन्यत्वे सति तत्संबंधितावच्छेदकत्वरूपतत्संबंधेन साध्य-
व्यापकतावच्छेदकत्वं निरूप्य तादृशव्यापकतावच्छेदिका यदभावप्रतियोगिता तादृशाभावाः प्रवेशनीयाः न च तत्संबंधावच्छि
न्नाधेयतेत्यादिकं व्यर्थं द्रव्यत्वाद्यभावप्रतियोगितायामपि संयोगसंबंधेन वन्ह्यादिव्यापकतावच्छेदकत्वापत्त्या यावदन्तर्गतस्य त-

त्संबंधेनद्रव्यत्वाद्यभावस्यसाध्यव्यापकताघटकीभूतसंयोगादिसंबंधेनप्रतियोगिसामानाधिकरण्याप्रसिद्ध्यासद्धेतुमात्रएवासं-
भवस्यावारणार्थं तदुपादानात् संयोगसंबंधावच्छिन्नाधेयत्वस्यद्रव्यत्वादावसत्वेनद्रव्यत्वादिनिष्ठप्रतियोगित्वस्याधेयतानवच्छे-
दकत्वात् तत्संबंधेनस्वावच्छिन्नानधिकरणत्वंचतत्संबंधेनस्वावच्छिन्नाधिकरणसामान्यभेदः तेनवन्ह्यादिनिष्ठप्रतियोगित्वावच्छि-
न्नाधिकरणगगनोभयभेदस्यघटत्वादिनावन्ह्यादिनिष्ठप्रतियोगित्वावच्छिन्नाधिकरणभेदस्यचवन्ह्यादिसाध्यवतिसत्वेपिनक्षति
अत्राभावइतिस्वरूपकथनम् वस्तुतः साध्यवन्निष्ठाभावस्यतत्संबंधावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदक

**नाधिकरणयावदभावाधिकरणवृत्तित्वाभावायाच्चांतोवृत्तिमद्वृत्तयस्तद्वत्वंव्याप्तिः केवलान्वयिनः संयोगाद्य-**
**भावस्याभावाः संयोगादयोनव्याप्यवृत्तयः एवंसाध्यस्यगुणसामान्यस्याभावोद्रव्यत्वाधिकरणेउत्पत्तिकाला-**
**वच्छेदेनवर्तमानोपिनव्याप्यवृत्तिः उक्तरूपावच्छिन्नप्रतियोगिताकः क्वचित्प्रसिद्ध्यादिसंपादकाः पुनरभावाः**
**हेतुसमानाधिकरणाः उक्तसमुदायाधिकरणवृत्तित्वतदभाववृत्तिमत्वानिपूर्वोक्तरीत्याप्रत्येतव्यानीत्यादिकम-**
**पास्तम् तद्विशिष्टेति विशेषणतावच्छेदकविशिष्टज्ञानस्यविशिष्टवैशिष्ट्यप्रत्ययहेतुत्वात् अभावप्रत्ययोहि**

त्वमेवतत्संबंधेनसाध्यव्यापकतावच्छेदकत्वंवाच्यम् तत्रचसाध्यवन्निष्ठत्वमभावस्यस्वरूपसंबंधेनग्राह्यम् तेनस्पंदःकालत्वा-
दित्यादौस्पंदत्वाद्यभावस्यापिकालिकसंबंधेनसाध्यवन्निवृत्त्यायावदनंतर्गतत्वात्समवायित्वेनवाच्यत्वाद्यभावस्यचतादृशप्रतियो-
गिसमानाधिकरणत्वेपितानिव्याप्तिः इत्थंचजातिसामान्याभावादेरपिवन्ह्यादिव्यापकतयातत्प्रतियोगिकस्यजात्यादिस्वरूप-
स्यहेतुसमानाधिकरणाभावस्यजातिसामान्याभावात्मकप्रतियोग्यसमानाधिकरणत्वादसंभवापत्तिरतोभावाइत्युक्तभावपि-

न्ता इति च तदर्थः यथा च सामानाधिकरण्येनानवच्छेदकत्वघटितायां व्यापकतायां न दोषस्तथाग्रे प्रपंचयिष्यते नव्यास्तु साध्यतावच्छे
दकेत्यादि साध्यतावच्छेदकावच्छिन्नाधिकरणानि यावंति तत्प्रत्येकवृत्तिवृत्तिप्रतियोगिताकेत्यर्थः नचैकमात्रवृत्तिसाध्यकसद्धेताव
व्याप्तिः तत्र यावत्त्वस्यानुपादेयत्वात् शब्दैक्यस्याकिंचित्करत्वात् यद्वा साध्यतावच्छेदकावच्छिन्नसमानाधिकरणा यावंतो धर्मा
स्तत्प्रत्येकसमानाधिकरणवृत्तिप्रतियोगिताकेत्यर्थः इति प्राहुः यत्तु साध्यवदवृत्त्यभावप्रतियोगितावच्छेदकप्रतियोगिताकेत्यर्थ इ
ति तन्न केवलान्वयिसाध्यकसद्धेतौ तादृशप्रतियोगित्वाप्रसिद्ध्याव्याप्तेः गगनस्वरूपाभावस्य तादृशत्वेपि हेतुसमानाधिकरणत्वासंभ

घटत्वादिविशिष्टस्य घटादेः प्रतियोगित्वमवगाहमानो विशेषणस्यापि घटत्वादेस्तदवच्छेदकत्वमवगाहते तेन स्वा
तंत्र्येण घटो नास्तीत्येव प्रतीतः तदिहाभावप्रत्ययो यदि व्यधिकरणधर्मेण विशिष्टप्रतियोगिनं नावगाहते नाव
गाहत एव तदा नस्यापि प्रतियोगितावच्छेदकत्वम् अथावगाहते तर्हि भ्रम एव न च ततोऽर्थसिद्धिरिति भावः
यदि पुनरानुभविको लोकानां स्वरसवाही घटत्वेन पटो नास्तीत्यादिप्रत्ययो न तदा तादृशाभावनिवारणं गीर्वाण
गुरुणामपि शक्यमिति मंतव्यम्

वादिति अत्र व्यापकतावच्छेदकप्रतियोगिताका इत्यत्र व्यापकताया अवच्छेदो यस्येति बहुव्रीहिकप्रत्ययः तेन प्रतियोगिद्वयासमं
अवच्छेदिका यदस्य समासे कोपधत्वेपि पुंवद्भावः तद्धितवत्कोपधास्यैव पुंवद्भावनिषेधादित्यभियुक्ताः सर्वत्रेति सद्धेतावसद्धेतावि
त्यर्थः तथा च यावत्त्वानुक्तावतिव्याप्तिरेव स्यान्नाव्याप्तिरिति भावः सकलव्यभिचारिणीत्यर्थ इत्यन्ये केचित्तु सर्वत्रेति सकलहेत्वाधिकर
णावच्छेदेनेत्यर्थ इत्याहुः वाच्यत्वाद्यभावस्येति घटत्वादिना वाच्यत्वाभावस्येत्यर्थः तथात्वात् प्रतियोगिसमानाधिकरणत्वात्

तथाच धूमवान्वन्हेरित्यादावतिव्याप्तिवारणार्थमेव यावत्पदोपादानमिति भावः ननु साध्यतावच्छेदकव्यापकप्रतियोगिताकयावदभा-
वो तथैव वाच्यत्वाद्यभावमादायोक्तस्यातिप्रसंगस्य व्युदाससंभवात् साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावानां
यावत्त्वोपादानं गौरवग्रस्तमत आह अत एवेति निरुक्ताभावे यावत्त्वोपादानादेवेत्यर्थः अन्यथाभूतत्वाद्यभावस्यासाध्यतावच्छेदकव्या-
पकप्रतियोगिताकान्यत्वाद्भूतत्वमूर्तत्वोभयत्वाद्यवच्छिन्नाभावस्य च तादृशप्रतियोगिताकस्य स्वविशिष्टहेत्वाधिकरणावच्छेदेन प्रतियो-
गिसमानाधिकरणत्वादतिव्याप्तिः स्यादेवेति भावः यत्तु साध्यप्रतियोगिको यत्किंचिदभावो यद्धर्मावच्छिन्नहेत्वाधिकरणावच्छेदेन प्र-
तियोगिसमानाधिकरणस्तद्धर्मवत्त्वमित्येव लक्षणमस्तु कृतं यावत्त्वगर्भनिरुक्त्या धूमवान्वन्हेरित्यादौ घटत्वेन धूमाभावस्यापि तादृशहेत्व-
धिकरणावच्छेदेन प्रतियोग्यसमानाधिकरणत्वादतिव्याप्तिव्युदासादित्याशंक्यात एवेत्यादिकमवतारयंति तत्तुच्छं तादृशशंकायां
धूमवान्वन्हेरित्यादिप्रसिद्धस्थल एव वन्हिधूमोभयत्वावच्छिन्नाभावमादायातिव्याप्तिसंभवे भूतत्वमूर्तत्वोभयवानित्याद्यनुधावनस्य स-
दर्भविरोधापत्तेः यदपि यादृशाभावस्य प्रतियोगिता व्यापकसाध्यतावच्छेदकतादृशः कश्चिदभावो यद्धर्मावच्छिन्नाधिकरणावच्छे-
देन प्रतियोगिसमानाधिकरणस्तद्धर्मवत्त्वं व्याप्तिरित्युक्त्यैव वाच्यत्वाद्यभावमादायातिव्याप्तिवारणसंभवाद्यावत्त्वगर्भलक्षणं गौरवग्र-
स्तमत उक्तं अत एवेत्यादि तदप्यसंगतं प्रतियोगितामात्रस्यैव प्रत्येकपर्यवसितत्वेन वन्हिधूमोभयत्वादेस्तद्व्यापकत्वासंभवाद्वन्हि-
धूमोभयवान्धूमादित्याद्यव्याप्तिभयेन तादृशनिरुक्तेः शंकितुमप्यशक्यत्वात् ननु प्रतियोगिसामानाधिकरण्यमित्यत्र प्रतियोग्यधिक-
रणत्वं साध्यनिरूपितसाध्यतावच्छेदकसंबंधेन ग्राह्यमित्यलं यावत्त्वनिवेशेनेत्यत आह अत एवेत्यादीत्यपि वदंति नव्यास्तु ननु साध्य-
तावच्छेदकातिरिक्तधर्मानवच्छिन्नसाध्यनिष्ठयादृशप्रतियोगिताको यत्किंचिदभावो यदधिकरणावच्छेदेन तादृशप्रतियोगिताश्रयसमानाधि-
करणस्तत्त्वमित्यस्यैव सम्यक्त्वे यावत्त्वगर्भलक्षणारंभो गौरवग्रस्तः प्रमेयवान्वाच्यत्वादित्यादौ विरुद्धघटत्वपटत्वोभयगगनाद्यवच्छिन्नप्र

तियोगिताकप्रमेयाभावमादाय लक्षणासंभवात् गगनादेर्वृत्तिमत्वलक्षणधर्मत्वाभावात् सामान्याभावीयान्यप्रतियोगित्वं स्वरूप
संबंधेन प्रत्याश्रयं विभिन्नमुपेय मनोविरुद्ध घटत्वपटत्वाभ्यां प्रमेयमात्रस्याभावमादायैव धूमवान्वन्हेरित्यादौ नातिप्रसंगः नचानवच्छिन्न
तवव्यर्थं वन्हिधूमोभयत्वावच्छिन्नाभावमादाय धूमवान्वन्हेरित्यादावतिव्याप्तेर्वारकत्वात्साध्यनिष्ठपदमपि तदर्थमेव अन्यथा गगनाद्य
वच्छिन्नप्रतियोगिताकवाच्यत्वाद्यभावमादाय व्यभिचारिमात्रेति व्याप्त्यापत्तेरित्यत आह अतएवेति इत्थंचभूतत्वविशिष्टमूर्तत्वाद्यभा
वस्य साध्यतावच्छेदकातिरिक्तधर्मावच्छिन्नप्रतियोगिताकतया तस्य प्रतियोगिसामानाधिकरण्यं नातिव्याप्तिं संपादयतीत्याशयेनाहि-
त्वाद्यवच्छिन्नाभावपर्यंतस्य प्रतियोगिसामानाधिकरण्यमपि साधुसंगच्छते परंतु प्रकृतसाध्यव्याप्यतावच्छेदकप्रतियोगिताकोयः क
श्चिदभावो यदधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणतत्वमेवाव्यभिचरितत्वं कुतो नोक्तम् भूतत्वमूर्तत्वोभयत्वावच्छिन्नप्रति
योगिताव्यक्तेस्तादृशोभयात्मकसाध्यव्याप्यतावच्छेदकत्वाभावादेवतादृशोभयाभावमादायातिव्याप्त्यसंभवादिति विभावनीयमिति-
प्राहुः भूतत्वमात्माभिन्नत्वे सति विशेषणागुणवत्वं तच्च न व्यापकतायाः प्रतियोगिवैयधिकरण्याघटितकल्पे भूतत्वमूर्तत्वोभयस्य व्या-
पकं तादृशोभयवति घटादावुत्पत्तिक्षणावच्छेदेन विशेषगुणत्वाद्यवच्छिन्नाभावसत्वादत उक्तं मनोन्यत्वेति साध्यस्यैवाभावमादाय नातिव्या
प्तिः स्फुटतरंचतत्वतरस्यैवेति कैमुतिकन्यायेनोक्तं मनोन्यत्वे इत्यपि वदंति अतथात्वादिति स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियो
ग्यसमानाधिकरणत्वादित्यर्थः मनस्येव व्यभिचारादिति भावः ननु यत्समानाधिकरणा यावंतोभावाः प्रतियोगिसमानाधिकरणास्त
त्वमित्यस्यैव सम्यक्त्वे साध्यतावच्छेदकावच्छिन्नेत्यादि व्यर्थं नच साधनसमानाधिकरणगोत्वाद्यभावस्य हेत्वधिकरणावच्छेदेन प्रति
योग्यसमानाधिकरणत्वादसंभव इति वाच्यम् तस्यापि पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणत्वात् नचै-
वेरीत्या व्यभिचारिण्यतिव्याप्तिरिति वाच्यं अभावस्य स्वसमानाधिकरणधर्मावच्छिन्नस्वकीयप्रतियोगिताश्रयसामानाधिकरण्य

तदन्यप्रतियोगिताया एव व्याप्यवृत्तितानिरूपकतया धूमाद्यभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावनिष्ठप्रतियोगिताया अतथात्वे
न धूमवान्वन्हेरित्यादावतिव्याप्त्ययोगादत आह साधनेत्यादि गोत्वादीत्यादिपदेन गगनादिसंग्रहः तथाच तद्दलानुक्तावसंभव एव-
स्यादिति भावः नन्वेवं यत्समानाधिकरणा यावंतः साध्यप्रतियोगिकाभावः साध्यतावच्छेदकसंबंधेन प्रतियोगिसमानाधिकरणा
स्तत्वमित्येवोच्यतां तावतैव गोत्वाद्यभावमादायासंभवस्य व्युदासादत आह तत्तदिति तथाचोक्तविवक्षायां द्रव्यत्वाद्येकव्यक्ति
साध्यकसद्धेतौ लक्षणासंभवेपि वन्हिमान्धूमाज्ज्ञानिमान्सत्वादित्यादौ साध्यप्रतियोगिकानां तत्तद्वन्ह्यभावानां आत्मत्वाद्यभावानां
च प्रतियोग्यसमानाधिकरणत्वादव्याप्तिरिति भावः नच साध्यव्यापकप्रतियोगिका इत्यस्यैव सम्यक्त्वे व्यापकतावच्छेदकप्रतियोगिता
कपर्यंतं व्यर्थमिति वाच्यं तत्तत्साध्यव्यक्तीनां गगनादीनां च प्रमेयत्वादिप्रकारेण साध्यव्यापकतया तदभावमादायासंभवापत्तेः नच वृ
त्तिमत्वे सति स्वानधिकरणसाध्यवन्निष्ठाभावाप्रतियोगित्वेन साध्यव्यापकत्वं निरुच्य तत्प्रतियोगिकाभाव एव निवेश्यतामिति वाच्यम् त
स्य लक्षणांतरत्वेप्युक्तलक्षणस्यादुष्टत्वादिति भावः यत्समानाधिकरणा इत्यत्र हेत्वधिकरणत्वं विशिनष्टि येनेत्यादिना तदधिकरण
मिति तत्संबंधीत्यर्थः तेन तादात्म्येनाधिकरणाप्रसिद्धावपि तत्संबंधेन सद्धेतौ नाव्याप्तिः अतथात्वेपीति प्रतियोग्यधिकरणवृत्तित्व-
विरहेपीत्यर्थः यद्यपि प्रतियोगिसमानाधिकरण्यमवश्यं स्वविशिष्टहेत्वधिकरणावच्छेदेनाग्रे विवक्षणीयं तथाच हेतुतावच्छेदकसंब
धेन हेत्वधिकरणानुक्तौ कालिकसंबंधेन धूमस्याधिकरणे महाकाले वर्तमानस्य प्रलयान्यत्वाद्यभावस्यापि यावदंतर्गतत्वात् स्वविशिष्ट
हेत्वधिकरणाप्रसिद्ध्या वन्हिमान्धूमादित्यादावव्याप्तिसंभवति तथापि स्वविशिष्टहेत्वधिकरणेत्यादेरुक्तावनुक्तौ चोभयथैव अयमात्मा
ज्ञानादित्यत्राव्याप्तिः वन्हिमान्धूमादित्यत्र स्वविशिष्टेत्याद्युक्तावेव तथेत्याशयेन प्रसिद्धोदाहरणं परित्यक्तं यत्तु महाकालस्यैव प्रलया
न्यत्वाद्यभावविशिष्टहेत्वधिकरणत्वसंभवात् स्वविशिष्टेत्याद्युक्तावपि वन्हिमान्धूमादित्यादौ नाव्याप्तिः महाकालस्य हेतुना घटकस

योगसंबंधेनधूमाधिकरणत्वाभावेपिहेतुसंबंधित्वानपायात् तादात्म्येनहेतोः संग्रहार्थं हेतुतावच्छेदकसंबंधेनयोहेतुसंबंधीतद्भि-
यावदभावानामेवनिवेशितत्वादिमतं यत्तुच्छसंयोगमात्रेणधूमहेतोः प्रभामंडलादौवह्नेर्व्यभिचारितया पर्वतादिनिरूपितसंयोगेनैव
तस्यहेतुत्वात्तादृशसंयोगेनचधूमस्याधिकरणे पर्वतादौ प्रलयत्वादिस्वरूपस्य प्रलयान्यत्वाद्यभावस्यवैशिष्ट्याप्रसिद्धेरावश्यकत्वात् वि-
भिन्नकालीनयोर्विषयतान्यसंबंधसामान्येनैवाधाराधेयभावविरहादितिदिक् ननुपृथिवीत्ववान्महाकालत्वात्महाकालकपालान्तरत्वा
द्धेत्यादावतिव्याप्तिः साधनसमानाधिकरणस्यमहाकालान्यत्वाद्यभावस्यापिहेत्वधिकरणमहाकालाद्यवच्छेदेनकालिकसंबंधेनप्र-
तियोगिसमानाधिकरणत्वादत आह एवमपिदलांतरेपि प्रतियोगिसामानाधिकरण्यदलेपीत्यर्थः एकसंबंधेनव्यापकत्वमन्यसंबं-
धेनप्रतियोगिसामानाधिकरण्यं इत्येवंसंबंधभेदनिबंधनः प्रोक्तातिव्याप्तिरूपोदोषः साध्यव्यापकताघटकसंबंधेनसार्द्धं प्रतियोगि
सामानाधिकरण्यघटकसंबंधस्यैक्यविवक्षयानिरसनीय इत्यर्थः यत्संबंधेनस्वावच्छिन्नानधिकरणसाध्यवन्निष्ठाभावप्रतियोगिताव-
च्छेदकं यद्यत्तदन्यप्रतियोगिताकः साध्यवन्निष्ठाभावीयतत्संबंधावच्छिन्नप्रतियोगितायाः सामानाधिकरण्यावच्छेदकान्यप्रतियोगि-
कोवायोभावस्तादृशसंबंधेनप्रतियोगिनोयदधिकरणं तद्भिन्नत्वं विवक्षितमितिफलितोर्थः पृथिवीत्वाद्यभावप्रतियोगित्वंतुनकालिक
संबंधेनपृथिवीत्वादिव्यापकतावच्छेदकं नित्यपृथिव्यांव्यभिचारात् किंतुसमवायेनैव तेनचसंबंधेनपृथिवीत्वाद्यभावस्यहेत्वधिकरण
महाकालावच्छेदेनप्रतियोगिसामानाधिकरण्याभावान्नोक्तातिव्याप्तिरितिभावः यत्तुयेनसंबंधेनव्यापकत्वंतेनसंबंधेनप्रतियोगिसा
मानाधिकरण्योक्तावपिनित्यज्ञानं ईश्वरसविषयकत्वादित्यत्रातिव्याप्तिः साधनसमानाधिकरणस्येच्छाभिन्नत्वाद्यभावस्यापिसा-
ध्यव्यापकताघटकविषयितासंबंधेनयावद्धेत्वधिकरणे प्रतियोगिसमानाधिकरणत्वात् नच येनयेनसंबंधेनव्यापकत्वंतेनतेनसंबंधे-
नप्रतियोगिसामानाधिकरण्यविवक्षणान्नोक्तदोषः तथासति यावत्पदवैयर्थ्यापत्तेः विशेषणतासामान्येनैवसाध्यवन्निरूपित-

विशेषणतयापिवाच्यत्वादेः साध्यव्यापकतयाघटत्वादिनावाच्यत्वाद्यभावस्यैवतादृशसंबंधेनहेत्वधिकरणावच्छेदेन प्रतियोगिसामा-
नाधिकरण्यविरहात् धूमवान्वन्हेरित्यादौ व्यभिचारिण्यतिव्याप्तिविरहात् नन्वेदंविषयितासंबंधेनव्यापकतायाएवासत्वाद्विषयि
तासंबंधेनस्वावच्छिन्नाधिकरणत्वाप्रसिद्ध्यास्वावच्छिन्नान्याधिकरणसाध्यवन्निष्ठत्वादिव्यापकतायास्तेनसंबंधेनासंभवात् नचते-
नसंबंधेनस्वावच्छिन्नसंबंधित्वमेवव्यापकतायांनिवेशनीयंत्वदुक्तातिप्रसंगभयेनैवतस्यानिवेशनीयत्वात् नचतत्संबंधावच्छिन्नायाः
साध्यवन्निष्ठाभावप्रतियोगितायाःसामानाधिकरण्येनानवच्छेदकधर्मवत्त्वलक्षणंव्यापकत्वंविषयितासंबंधेनसकलंसाध्यवतिनित्य-
ज्ञानेवस्तुमात्रस्यैवविषयितासंबंधेनसत्वेपिनित्यज्ञानान्यत्वविशिष्टघटादेर्विषयितासंबंधेनाभावस्यतत्रसत्वेबाधकाभावादितिवाच्यंवि
षयितायावृत्त्यनियामकतयातत्संबंधावच्छिन्नप्रतियोगिताप्रसिद्धेः यदपिमनस्त्ववत् अणुत्वादित्यत्रातिव्याप्तिः परमाणुत्वसमाना-
धिकरणस्यमनस्त्वाद्यभावस्यापिसाध्यव्यापकताघटकदिक्कृतविशेषणतयासर्वत्रैवपरमाणौप्रतियोगिसमानाधिकरणत्वादिति तदपि
तुच्छंनित्यानामव्यावर्तकत्वाज्जन्यानामेवमूर्तानांदिगुपाधितयापरमाणौदिक्कृतविशेषणतयाकस्याप्यसत्वात् तेनसंबंधेनसाध्यव्यापक-
त्वविरहात् अन्यथावस्तुमात्रस्यैवकालोपाधित्वसंभवात्तदपिजन्यमात्रस्यनस्यात् अतएवप्रलयदशायांदिग्देशविभागोनास्तीत्यादि-
सिद्धांतःसंगच्छते अन्यथापरमाणूनांसत्वात्तदानीमपिदिग्विभागप्रसंगादितिदिक् यदिचस्पंदोमहाकालत्वादित्यादावतिव्याप्तिः
साधानससमानाधिकरणस्यमहाकालान्यत्वाद्यभावस्यापिसाध्यव्यापकताघटककालिकसंबंधेनमहाकालेप्रतियोगिसमानाधिक-
रणत्वात् नचायंस्पंदइत्याकारकयत्किंचिद्बोधव्यक्तेर्विषयतासंबंधेनैवस्पंदत्वव्यापकत्वात् यावदंतर्गतस्यतदभावस्यैवसाध्यव्या-
पकताघटकविषयतासंबंधेनहेत्वधिकरणमहाकालेप्रतियोगिसमानाधिकरणत्वाभावान्नातिव्याप्तिः नहितादृशबोधव्यक्तौका-
लिकसंबंधेनापिस्पंदत्वव्यापकत्वंभाविभूतेषुस्पंदेषुव्यभिचारादितिवाच्यं विषयतायाःज्ञानसमानकालीनतयातद्बुद्धिव्यक्त्यभाव

दशायामेवस्पंदत्ववर्तिविषयतासंबंधेननतद्बुद्धिव्यक्त्यभावस्यसत्वात् विषयतासंबंधेनायंस्पंद इत्याकारकजन्यबुद्धेः साध्यव्यापक
त्वासंभवात् किंचव्यधिकरणधर्मावच्छिन्नाभावस्यासत्वेपिव्यधिकरणसंबंधावच्छिन्नवाच्यत्वाद्यभावमादायैवकेवलान्वयिसाध्यक
स्थलेलक्षणसमन्वयात्प्रतियोग्यवृत्तिश्चेत्यादिमूलस्यनदूषकत्वानुपपत्तेः नचसाध्यवन्निष्ठाभावीयत्प्रतियोगितायाः सामा-
नाधिकरण्यंनानवच्छेदकधर्मवत्त्वरूपव्यापकतायांव्यधिकरणधर्मावच्छिन्नाभावमादायासंभववारकस्यसामानाधिकरण्येने
त्यस्यव्यर्थतायामेवतन्मूलग्रंथस्यतात्पर्यमितिवाच्यं सामान्यधर्मेणविशेषाभावमादायव्यापकत्वस्याप्रसिद्धेर्वारणार्थमेवसा-
मानाधिकरण्यदलस्यव्यापकतायामवश्यंनिवेशनीयत्वादित्याकविभाव्यतेतदासंबंधैक्यविवक्षयेतिग्रंथस्यसाध्यव्यापकत्वस्य
तदवच्छेदकप्रतियोगित्वस्यप्रतियोगिसामानाधिकरण्यघटकीभूतप्रतियोग्यधिकरणत्वस्यचैकसंबंधावच्छिन्नत्वविवक्षयेत्यर्थः त
थाचस्वप्रतियोगितावच्छेदकसंबंधावच्छिन्नसाध्यव्यापकतावच्छेदकप्रतियोगिताकायावंतोभावाः स्वप्रतियोगितावच्छेदकसंबं-
धेनप्रतियोगिसमानाधिकरणाइत्यर्थलाभात् यावदंतर्गतस्यसमवायादिसंबंधेननित्यज्ञानत्वमनस्त्वस्पंदत्वाद्यभावस्यस्वप्रतियो-
गितावच्छेदकीभूतसमवायादिसंबंधेनयावद्वृत्त्यधिकरणेप्रतियोग्यसमानाधिकरणत्वात् नित्यज्ञानंईश्वरसविषयकत्वात् मनस्त्वव
त् अणुत्वात् स्पंदोमहाकालत्वादित्यादौकुत्रापिनातिव्याप्तिः नचैवंवाच्यज्ञेयत्वादित्यादावव्याप्तिः व्यधिकरणधर्मावच्छिन्नवाच्य
त्वाद्यभावस्यैवतत्रघटकतयातस्यप्रतियोगितावच्छेदकसंबंधसत्वेमानाभावादितिवाच्यं स्वरूपसंबंधेनघटत्वादिनावाच्यत्वंनास्ती
त्यादिप्रतीत्यनुरोधेनतादृशाभावस्यापिप्रतियोगितावच्छेदकसंबंधस्वीकारात् अन्यथाभूतलेसंयोगेनपटत्वावच्छिन्नघटवदित्ये-
वनिर्णयसत्वेपिभूतलेसंयोगेनपटत्वेनघटोनास्तीतिप्रत्ययप्रसंगात् नचैवमपसिद्धांतः व्यधिकरणधर्मावच्छिन्नोपिचेदभावः प्रामा-
णिकस्तदासर्वैःसंबंधैस्तत्प्रतियोगितावच्छिद्यतामितिग्रंथकृतैवसामान्याभावेवक्ष्यमाणत्वात् केचित्तुसंबंधैक्यविवक्षयेत्यस्य

साध्यवत्त्वं साध्यव्यापकत्वं प्रतियोगित्वं प्रतियोगिसामानाधिकरण्यघटकीभूतप्रतियोग्यधिकरणत्वं चैकेन साध्यतावच्छेदकसंबंधे
न विवक्षणीयमित्यर्थः तथाच साध्यतावच्छेदकसंबंधावच्छिन्नसाध्यव्यापकतावच्छेदकीभूततादृशसंबंधावच्छिन्नप्रतियोगिताका
यावन्तोऽभावाः साध्यतावच्छेदकसंबंधेन प्रतियोगिसमानाधिकरणा इत्यर्थलाभान्नकुत्राप्यतिव्याप्तिः नच प्रतियोगितायाः साध्य-
तावच्छेदकसंबंधावच्छिन्नत्वविवक्षणं व्यर्थमिति वाच्यं तदनुक्तौ वाच्यत्वादिभेदमादायैव केवलान्वय्यादौ लक्षणासंभवे प्रतियोग्यवृ
त्तिश्चेत्यादिमूले तन्निराकरणस्यासंगतत्वापत्तेः नचैवमपि सर्वत्र वाच्यत्वाद्यभावस्येत्यादिग्रंथविरोधः वाच्यत्वादेः संयोगादिसंबंधे
न धूमाद्यव्यापकत्वादिति वाच्यं वाच्यत्वाद्यभावस्येत्यादिपदसत्त्वात् यत्र स्वरूपसंबंधेन साध्यता तत्र वाच्यत्वाद्यभावमादाय संयो
गादिसंबंधेन साध्यतायां च द्रव्याद्यभावमादायातिव्याप्तिपरतयैव तत्संगतेरित्याहुः ननु इदं मनोन्यत्वाद्यभावस्येत्याद्युक्तग्रंथविरोधात्
भूतत्वमूर्तत्वोभयस्य समवायेन साध्यतायां मनोन्यत्वस्य तत्संबंधेन साध्यव्यापकत्वासंभवात् वृत्त्यनियामकसंबंधेनाधिकरणत्वस्य
प्रतियोगित्वस्य चाप्रसिद्ध्यानेन साध्यतायां धनी चैत्रत्वादित्यादिसद्धेतावव्याप्तिः तद्रूपान्यरूपरूपत्वादित्यादावतिव्याप्तेश्च साध्य-
ताघटकसमवायेन साध्यव्यापकतावच्छेदकप्रतियोगिताकानां व्यधिकरणधर्मावच्छिन्नगुणत्वाद्यभावानां सर्वेषामेव स्वविशिष्टहेत्व
धिकरणावच्छेदेन प्रतियोगिसमानाधिकरणत्वादिति यत्तु विशेषणसाध्यव्यापकत्वं तेनैव च प्रतियोगित्वं प्रतियोगिसामानाधिसा
मानाधिकरण्यं च संबंधैक्याविवक्षेत्यस्यार्थमाह तदपि न वाच्यत्वाद्यभावस्यात्मत्वाद्यभावस्येत्यादिग्रंथस्यासंगततापत्तेरुपेक्षितमिति
नन्वेतावताप्ययमात्मा ज्ञानादित्यादावव्याप्तिरेव घटत्वादिनात्मत्वसामान्याभावस्य स्वविशिष्टस्य हेतोर्विषयतयाधिकरणे घटादौ व्या
पकताघटकसमवायेन प्रतियोगिसामानाधिकरण्याभावादत आह दलान्तरेति पश्चादुक्तहेत्वधिकरणावच्छेदेनेत्यत्र हेत्वधिकरणदले
पीत्यर्थः संबंधैक्याविवक्षयेति हेतुसमानाधिकरणा इत्यत्र हेत्वधिकरणत्वं येन संबंधेन स्वविशिष्टहेत्वधिकरणावच्छेदेनेत्यत्र हेत्व-

धिकरणत्वं तेनैवसंबंधेनेति विवक्षयेत्यर्थः इत्थंचदलांतरमपि साधुसंगच्छत इतितु नव्याः यद्वा धूमवान्वह्नेरित्यत्रातिव्याप्तिः धू
मसामान्याभावस्यापि हेत्वधिकरणावच्छेदेन स्वप्रतियोगित्वस्य कालिकसंबंधेनाश्रयीभूतवन्ह्यादेः सामानाधिकरणत्वादत आह दलां
तरेपीति प्रतियोगिसामानाधिकरण्यमित्यत्र प्रतियोगिताश्रयदलेपीत्यर्थः संबंधभेदनिबंधनो दोषः प्रकृतसाध्यव्यापकत्वस्यैकसंबंधा
वच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्यान्यसंबंधावच्छिन्नप्रतियोगिताश्रयीभूतवन्ह्यादेः सामानाधिकरण्यनिबंधनो दोषः
संबंधैक्यविवक्षया यत्संबंधेन व्यापकतावच्छेदकत्वं प्रतियोगिसामानाधिकरण्यमित्यत्रापि तेनसंबंधेन प्रतियोगिताश्रयत्वविवक्ष
येत्यर्थ इतिसंक्षेपः अत्रसंबंधैक्याविवक्षायां रूपसामान्याभाववान् पृथिवीत्वाज्जन्यपृथिवीत्वादित्यादिविरुद्धहेतावप्यतिव्याप्तिः
साधनसमानाधिकरणस्य पृथिव्यन्यत्वाद्यभावस्यापि हेत्वधिकरणपृथिव्यवच्छेदेन जन्यपृथिव्यवच्छेदेन वा दिक्कृतविशेषणतया
प्रतियोगिसमानाधिकरणत्वात् मूर्तमात्रस्यैव दिगुपाधित्वोपगमात् नचतस्यालक्ष्यत्वे नीरूपमित्याकारकयत्किंचित्प्रमाव्यक्तेर्विष
यतासंबंधेन साध्यव्यापकत्वाद्यावदंतर्गतस्य तदभावस्यैव हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिः
तादृशबुद्धिव्यक्तेर्विभिन्नकालीनघटादौ केनापिसंबंधेनासत्वादिति वाच्यम् विषयताया ज्ञानसमानकालीनतया तादृशबुद्ध्यभा
वदशायामेव रूपशून्ये गगनादौ विषयतासंबंधेन तद्बुद्ध्यभावप्रतियोगित्वावच्छिन्नाभावसत्वात्तादृशे ज्ञानव्यक्त्यभावस्य साध्यव्या
पकतावच्छेदकप्रतियोगिताकत्वाभावात् स्वावच्छिन्नानधिकरणसामान्यवन्निष्ठेत्यादि व्यापकतायास्तद्बुद्धिव्यक्तौ सत्वेपि प्रतियोगि
वैयधिकरण्याघटितव्यापकत्वस्य तद्बुद्धिव्यक्तावसत्वेनोक्तस्थलेऽतिव्याप्तेरावश्यकत्वादिति भ्रमं निराकुरुते रूपसामान्येत्यादि
ना पृथिवीत्वादिकमिति नित्यपृथिव्यां दिगुपाधित्वे मानाभावादादिपदं नेनजन्यपृथिवीत्वाद्युपग्रहः सद्धेतुप्रतिकूलविरोधं निर
स्यति प्रलयइति महाप्रलयइत्यर्थः खंडप्रलयेतु पार्थिवपरमाणौ रूपमस्त्येव अन्यथोत्तरसर्गे पार्थिवद्व्यणुकस्य रूपोत्पत्त्यर्थे·

परमाणौ पाकांतरकल्पनापत्तेरिति प्रांचः प्रलय इत्यस्य पाकेन रूपादेः प्रलयदशायामित्यर्थः तेन महाप्रलयानभ्युपगमेऽपि न क्षतिः उ
त्पत्तिकाले चेत्यत्र च कारेण निरुक्तप्रलयस्यानुकर्षणात् अवयविन्यपि पाकदशायां तत्सत्वात् नयं ग्रंथन्यूनतेत्यपरे ननु विरोधविरहे घटाद्यव
च्छेदेन व्यभिचारित्वात्कुतः सद्धेतुत्वमत आह उत्पत्तीति यद्यपि पाकेन श्यामादिरूपनाशकालेऽपि अवयविनि रूपसामान्याभावस-
त्वं तथापि पिलुपाकवादिमते तदसंभवात् अपच्यमानावयविन्यनुसंधानाच्च उत्पत्तिकालमात्रानुसरणम् तत्सत्वादिति रूपादिसामा-
न्याभावसत्वादित्यर्थः प्रतियोगिवदिति प्रतियोगिन इवेत्यर्थः विरोधित्वं एकदैकदेशावृत्तित्वं मानाभावादिति प्रलयाद्यवच्छेदेन परिमा
णवादौ रूपादिसामान्याभावे तु योग्यसन्निकर्षाभावात् प्रत्यक्षासंभवेऽप्यनुमानादिकं मानमस्तीत्याशयः यत्तु घटादावुत्पत्तिकालाव-
च्छेदेन रूपसामान्याभावस्य प्रत्यक्षमेवसंभवति तदानीं चक्षुःसंयुक्तविशेषणतायास्तत्रासत्वेऽपि द्रव्यसमवेतवृत्त्यभावप्रत्यक्षहेतोश्च
क्षुःसंयुक्तसमवेतविशेषणतायाः सत्वेन संनिकर्षसंभवादिति तन्तुच्छं चक्षुःसंयुक्तसमवेतद्व्यणुकविशेषणतया रूपाद्यभावचा-
क्षुषापत्त्या चक्षुःयोग्यसंयुक्तसमवेतविशेषणताया एव अभावग्राहकत्वेन द्रव्यान्यद्रव्यसमवेतवृत्त्यभावचाक्षुषत्वस्यैव तज्जन्यतााव
च्छेदकत्वात् अन्यथा त्रसरेणुवृत्त्यभावचाक्षुषे व्यभिचारापत्तेः वस्तुतः स्योत्पत्तेः पूर्वं चक्षुःसंयुक्तसमवेतस्य घटादेरसत्वात्तद्वि
शेषणताया अपि तदानीमसत्वात्तदुक्तक्रमेणाहेतुत्वेन नास्तीति ध्येयम् अत एवेति ध्वंसप्रागभावयोरत्यंताभावविरोधित्वे मानाभावा
देवेत्यर्थः रक्तिमध्वंसप्रागभावयोः सत्वमावेदयितुमंतरापदं रक्तरूपमितिनच गुणे शुक्लादयः पुंसीत्यनुशासनात् रक्तो नास्ती-
त्येव प्रयोगो युक्त इति वाच्यं वस्त्वंतरविशेषणतानापन्नस्यैव शुक्लादिशब्दस्य पुंस्त्वानुशासनात् अत एव शुक्लरूपमिति प्रयोगः समासे
मणिकृतैव वक्ष्यत इति ध्येयं एवरक्तरूपं नास्तीति प्रत्ययः पूर्वेत्यादि पूर्वरक्तस्य ध्वंसवति उक्तरक्तस्य प्रागभाववति इदानीं रक्ते पीत्यर्थः
न च रक्ततादशायां वर्तमानस्यापि रक्तांतरध्वंसादेस्तदानीं रक्तत्वावच्छिन्नप्रतियोगिताकत्वविरहान्न तादृशप्रत्ययस्तस्याव्याप्यवृत्तित्वा

द्दितिवाच्यं ध्वंसादिप्रतियोगित्वस्य किंचिद्धर्मानवच्छेद्यत्वात् तत्तदनंतध्वंसप्रागभावादिषु रक्तत्वावच्छिन्नप्रतियोगिताकत्वकल्पनाम-
पेक्ष्य रक्तत्वावच्छिन्नात्यंताभावसंबंधस्यैवांतरास्यामादिषु कल्पनायां लघुत्वाच्च तच्चयावंतिरक्तरूपाणि तत्तद्व्यक्तित्वेनरधर्मानव-
च्छिन्नतत्तद्व्यक्तिनिष्ठप्रतियोगिताकाभावकूटैरेव रक्तं रूपं नास्तीति प्रत्ययः क्रियते प्रकृते च विद्यमानरूपप्रतियोगिकस्य तादृशा-
भावस्यासत्वान्न तथाप्रतीतिरिति वाच्यम् तथा सत्यंतराश्यामे रक्तं रूपं नास्तीत्याकारकनिर्णयेपि तत्र रक्तं रूपमस्तीति प्रत्यया-
पत्तेः विरोधिनः सामान्याभावस्यानिश्चयात् विशेषाभावकूटनिर्णयस्याप्रतिबंधकत्वात् अन्यथा सामान्याभाव एव न सिद्ध्ये-
दिति भावः प्रांचस्तु प्रतियोगिता संबंधेन रूपत्वमात्रावच्छिन्नप्रकारताकः संसर्गाभावविशेष्यकः प्रत्ययो रूपत्वावच्छिन्नप्रकार-
ताकबुद्धेर्विरोधीति रूपत्वं प्रतियोगितावच्छेदकमेव नेति श्यामतादशायां रूपत्वावच्छिन्नाभाव एव रूपं नास्तीति प्रतीतेर्न विषयः
किमनुरोधेन रूपध्वंसादिमति तदत्यंताभावसिद्धिरित्याहुः तन्मेदं अंतरास्यामे समवायेन रक्तं रूपं नास्तीति प्रतीतेः प्रामाण्यानुरो-
धेनैव ध्वंसात्यंताभावयोर्न विरोधः अन्यथा समवायावच्छिन्नप्रतियोगिताकध्वंसाद्यप्रसिद्ध्या तत्प्रतीतेर्भ्रमत्वापत्तेरिति तु परमा-
र्थः तत्समानाधिकरण्यं चेति प्रतियोगिसामानाधिकरण्यं चेत्यर्थः स्वविशिष्टेति स्वपदं लक्षणघटकतत्तदभावव्यक्तिपरं तथा
च तत्तदभावाश्रयीभूतं येद्धेतुनाघटकसंबंधेन हेतुतावच्छेदकधर्मावच्छिन्नाधिकरणं तदवच्छेदेन तत्तदभावस्य स्वप्रतियोगिसामा-
नाधिकरण्यं ग्राह्यमित्यर्थः तेन हेतुसामानाधिकरणस्य घटत्वादिना वन्ह्याद्यभावस्यापि कालिकसंबंधेन धूमाद्यधिकरणस्पंदादौ व्या-
पकताघटकसंयोगादिसंबंधेन प्रतियोगिसामानाधिकरण्याभावोपि वन्हिमान् धूमादित्यादौ नाव्याप्तिः नवा द्रव्यं विशिष्टसत्वादित्या-
दौ घटत्वादिना द्रव्यत्वाद्यभावस्य हेत्वधिकरणाद्यवच्छेदेन प्रतियोग्यसमानाधिकरणत्वेपि क्षतिः गुणादीनां विशिष्टसत्वानधिकर-
णत्वात् यद्यपि व्याप्यवृत्तेरवच्छेदकत्वे मानाभावाद्वाच्यत्वाद्यभावनिष्ठयत्प्रतियोगिसामानाधिकरण्यं तदवच्छेदकत्वं न हेत्वधिकरण

स्यत्वस[illegible] व्याप्तितादवस्थ्यंच नचस्वविशिष्टहेत्वधिकरणताव्यापकीभूतप्रतियोग्यधिकरणतावद्वृत्तित्वं वाच्यं स्वविशि-
ष्टपदवैयर्थ्यापत्तेः प्रतियोग्यकरणीभूतस्वविशिष्टयावद्धेत्वधिकरणवृत्तित्वस्योक्तौ द्रव्यंतद्दुत्वादित्यादावव्याप्तिः यावद्धेत्वधिकर-
णाप्रसिद्धेः तथापि यावंतो हेतुमद्वृत्तिधर्माः हेत्वधिकरणत्वानिवाच्यावंतित प्रत्येकाश्रयीभूतप्रतियोग्यधिकरणवृत्तित्वस्यविवक्षितत्वा
द्दोषः एकमात्रवृत्तिहेतोरपि तत्तत्क्षण वृत्तित्वविशिष्टस्य बहून्यधिकरणानि संतीति न तत्राव्याप्तिः नचप्रतियोग्यधिकरणवृत्तिस्वविशि
ष्टयावद्धेत्वधिकरणताकत्वमात्रसम्यक् स्वविशिष्टस्य हेतुसमानाधिकरणा इत्यस्यच वैयर्थ्यापत्तेरिति भावः प्रागुक्तमपि स्वविशिष्टपदं
हेत्वधिकरणावच्छेदेनेत्यस्य प्रवेशे एवार्थवद्भवति इत्यतः पश्चादुक्तस्यापि तस्य प्रथमं प्रयोजनमाह तेनेति गोत्वादिना गवाद्यभावस्यत
द्वृत्तिकाले वृत्तावपि यदा गोत्वं तदा गौरित्यादौ नातिप्रसंग इति योजना इदमुपलक्षणं तत्तद्योगोलकान्यत्वाद्यभावस्यापि प्रतियोगिसा-
मानाधिकरणत्वाद्धूमवान्वह्नेरित्यादावतिप्रसंगो द्रष्टव्यः गवाद्यभावस्य प्रतियोग्यधिकरणे दैशिकसंबंधेनापि वृत्तित्वमुपपादयतुमाह
गवाद्यन्यधिकरणेति इदानीं चत्वरे गौर्नास्तीति प्रत्ययात् गोमत्यपि काले कालिकसंबंधावच्छिन्नगवाद्यभावस्य गवानधिकरणचत्वरा
द्यवच्छेदेन वृत्तौ न विरोधः नचैतत्प्रत्ययस्य चत्वर एवैतत्कालावच्छेदेन गवात्यंताभावो विषय इति वाच्यं देशवृत्तौ कालस्येव कालवृत्तौ दे
शावच्छेदकत्वानुभवादेकशेषस्य कर्तुमशक्यत्वात् इदानीं गगने गौर्नास्तीति प्रतीतेर्गवाद्यभावस्य तत्कालावच्छेदेन गगनवृत्तित्वाव-
गाहितायां भ्रमत्वापत्तेश्च गवाद्यभावस्य गगनादौ सार्वदिकत्वेन व्याप्यवृत्तित्वया कालावच्छेद्यत्वासंभवादिति भावः नह्यतीति गवा
दिमतीत्यर्थः कालेजन्यकाले ननु चरमध्वंसात्मकस्य प्रलयात्यंताभावाभावस्यापि यावदंतर्गतत्वात्तस्य सृष्टिकाले प्रतियोगिसामाना-
धिकरण्याभावान्नातिव्याप्तिरत आह महाकालेवेति तथाच तस्यापि महाकाले प्रतियोगिसामानाधिकरण्यात्तस्य कालिकसंबंधेन जग
दाधारत्वादिति भावः ननु गोत्वादिजातेः प्रलये कालिकसंबंधेन सत्वे प्रमाणाभावाद्यदा गोत्वं तदा गौरिति सद्धेतुरेवेति यदि ब्रूयात्तदा-

प्याह यत्रकालत्वमिति उक्तविवक्षानादरे घटादिसाधारणरूपेणगोः साध्यतायामतिव्याप्तिरित्याशयेनसाध्यांतरमाह जन्यद्रव्यमिति
द्रव्यस्यसाध्यतायांकालत्वसद्धेतुरंवप्रलयेकालिकसंबंधेपरमाणवादेः सत्वात् कार्यद्रव्यानधिकरणीभूतत्वेसति द्रव्यवत्वेनैवधर्मिग्राहक
प्रमाणेनतत्सिद्धेरनोव्यभिचारित्वसंपत्तयेजन्यपदं ननुमहाप्रलयानंगीकारेप्रागुक्तहेतुद्वयमेवलक्ष्यंखंडप्रलयेपिब्रह्मांडांतरेजन्यद्रव्य
सत्वात् अतःसाध्यांतरमाहप्रलयाद्यवृत्तिर्वेति खंडप्रलयावृत्तिर्वेत्यर्थः यद्यपिप्रतियोगिनोयदधिकरणं तद्वृत्तित्वस्यदैशिकसंबंधेनविवक्षा
यामपियदागोत्वंतदागौरीत्यादावतिव्याप्तिवारणंसंभवतिप्रलयाद्यवृत्तित्वावच्छिन्नाभावस्यप्रतियोग्यधिकरणेमहाकालादौदैशिकवि
शेषणतासंबंधेनवृत्तित्वविरहात् नचद्रव्यंमहाकालत्वादित्यादावव्याप्तिः कालिकसंबंधेनमहाकालनिष्ठस्यद्रव्यत्वाद्यभावस्यस्व-
प्रतियोग्यधिकरणेदैशिकविशेषणतयावृत्त्यभावादितिवाच्यं हेतुसमानाधिकरणत्वस्यापितादृशविशेषणतयाविशेषणीयत्वात् [illegible]या
पिरूपभिन्नंगुणत्वादित्यादौसाधनसमानाधिकरणस्यरूपान्यत्वाद्यभावस्यरूपभिन्नत्वप्रकारकप्रमाविशेष्यत्वाद्यभावस्यचरू[illegible]ादि
स्वरूपतयादैशिकविशेषणतासंबंधेनवृत्तित्वविरहेणयावदनंतर्गतत्वात् घटत्वादिनारूपभिन्नत्वाद्यभावस्यचसर्वस्यैवत[illegible]ादृशाभाव
स्यमहाकालादौस्वप्रतियोगिसमानाधिकरणत्वादतिव्याप्तिरतः स्वविशिष्टहेत्वधिकरणेत्यादिविवक्षानुसरणमितिवदं[illegible]ते वस्तुतो
दैशिकविशेषणताघटितस्यलक्षणांतरत्वादेकेनापरस्यान्यथाकर्तुमशक्यत्वादुक्तलक्षणेनवैयर्थ्यमितिपरमार्थः यत्तुहे[illegible]त्वधिकरणे
विशेषणतयावर्तमानानांनिरुक्तयावदभावानांप्रतियोगिवृत्तित्वमेवविशेषणतासंबंधेनोचितप्रतियोग्यधिकरणवृत्तित्व[illegible]प्रवेशेगौरवात्
सर्वत्रव्यभिचारीस्थलान्यत्वाद्यभावमादायातिव्याप्त्यभावादितितच्चुच्छं स्ववृत्तित्वविशिष्टानांकेवलान्वयिधर्माणामत्यंताभ[illegible]ावस्यस्वप्रति
योग्यवृत्तित्वेनासंभवापत्तेः नहिवाच्यत्वादिवृत्तित्वविशिष्टानांवाच्यत्वादीनामभावोवाच्यत्वादिरूपप्रतियोगिवृत्तिरिति[illegible]ादिक प्राचां-
मतेसंयो[illegible]भावसाध्यकमेघद्रव्यएवव्यभिचारीत्यतः कपिपदंप्रतियोगिवैयधिकरण्यघटितमेवसाध्यव्या[illegible]कत्वमत्रप्रवेशि

तम्   यथासन्निवेशे वैय्यर्थ्यविरहादतस्तदवच्छेदकत्वस्य संयोगाभावनिष्ठप्रतियोगित्वेप्यक्षयतेरित्याशयेन संयोगात्मकाभावस्याभि
धानं तदघटितसाध्यव्यापकतायाः प्रवेशेतु गगनत्वादिविशिष्टवाच्यत्वाद्यभावस्य गगनत्ववाच्यत्वोभयत्वावच्छिन्नाभावादेर्यावदंतर्ग
त्वात्तस्यच हेत्वधिकरणीभूतगगनावच्छेदेन प्रतियोग्यसमानाधिकरणाद्व्याप्तिरतः   स्वविशिष्टपदं एतदभिप्रायेणैव संयोगाद्यात्मका
भावेत्यत्राद्यपदमुपात्तं वस्तुतो सत्तावान्द्रव्यत्वात् गुणत्ववान्रूपत्वात् इत्यादौ कालेजन्यरूपेच हेतुसमानाधिकरणस्य सत्ताभाव
स्यगुणत्वसामान्याभावस्यच केनापि संबंधेनात्मगगनादौ नित्यरूपे चावृत्तित्वाद्धेत्वधिकरणावच्छेदेन तस्यैव यावदंतर्गतस्य प्रतियोगि
सामानाधिकरण्यविरहादव्याप्तिः स्याद्यदिस्वविशिष्टपदं नस्यादितिदिक्   ननु धूमाद्यभावनिष्ठो जलादिवृत्तित्वविशिष्टगोत्वाद्यभावस्या-
भावो धूमाभाव एवाभावप्रतियोगिकस्याभावाधिकरणकाभावस्याधिकरणस्वरूपत्वात्   तथाच धूमादौ साध्ये वन्ह्यादिहेतावतिव्या
प्तिर्धूमाद्यभावस्य हेत्वाधिकरणावच्छेदेन गोत्वाद्यभावरूपप्रतियोगिसमानाधिकरणत्वादत आह जलावृत्तीति   नचतादृशाभावस्य
धूमाभावस्वरूपत्वेपि जलादौ नतादृशाभावत्वावच्छिन्नाधिकरणत्वं   किंतु धूमाभावत्वावच्छिन्नाधिकरणत्वमेवेति नप्रत्ययातिप्रसंगइ
तिवाच्यं   एवसत्यभावमात्रस्यैवप्रायेणाभेदप्रसंगात्   उक्तक्रमेणैवातिप्रसंगवारणसंभवादिति भावः   ननु तथापि धूमावान्वन्हेरित्या
दावतिव्याप्तिः   समनियताभावानामैक्याद्धूमाभावस्य वन्हिधूमोभयाभावादभिन्नस्यायोगोलकान्यत्वाभावादेश्चायोगोलकभेदत्वादि
नाभेदसामान्याभावादभिन्नस्य हेत्वधिकरणावच्छेदेनैव वन्ह्यादिभेदाद्यात्मके प्रतियोगिसामानाधिकरण्यादितिचेदत्राहुः   यावत्सद
स्यफलतः   प्रतियोगिताविशेषणत्वेन साध्यव्यापकतावच्छेदकीभूतयद्यत्प्रतियोगिताकोभावस्तस्य स्वविशिष्टहेत्वाधिकरणावच्छेदेन
तत्तत्प्रतियोगिताश्रयसामानाधिकरण्यं विवक्षितं   तथाच धूमादिसामान्याभावस्य धूमादिनिष्ठतादृशप्रतियोगिताकस्य धूमादिनि-
ष्ठप्रतियोगिताश्रयेण धूमादिना हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिः   नचपक्षसमानाधिकरणाइत्य-

स्यवैयर्थ्यं आत्मत्वसामान्याभावीयप्रतियोगितायाअपिसाध्यव्यापकतावच्छेदकतयातत्प्रतियोगिताकस्यात्मत्वसामान्याभावस्य
तादृशप्रतियोगिताश्रयसामानाधिकरण्यविरहादयमात्माभानादित्यादावव्याप्तिवारकत्वात् जलादिद्रव्यत्वविशिष्टेत्यादिग्रंथस्तुवस्तुगतिमनु
रुध्यैवोक्तस्तेन तादृशाभावस्यधूमाभावस्वरूपत्वेपिनस्यहेत्वधिकरणावच्छेदेनसाध्यव्यापकतावच्छेदकीभूतधूमनिष्ठप्रतियोगिताव्यक्त्याश्र
यसामानाधिकरण्यविरहादेवातिव्याप्त्यसंभवेपिनक्षतिः नचधूमत्वंनधूमाभावस्यधूमनिष्ठंयत्प्रतियोगित्वंतदेवधूमत्वेनप्रमेयसामान्याभावस्य
प्रमेयसामान्यनिष्ठंलाघवान्नतुतद्भिन्नप्रतियोगित्वांतरगौरवादित्युक्तविवक्षयाप्यप्रतीकारइतिवाच्यम् स्वरूपसंबंधात्मिकायाः प्रतियो-
गितायाः सामान्याभावस्थलेप्रतियोगिभेदेनैवभिन्नत्वादितिसांप्रदायिकाः वस्तुतः साध्यव्यापकतावच्छेदकायाः स्वन्यूनवृत्तिधर्मान-
वच्छिन्नाया यादृशप्रतियोगितायानिरूपकोऽभावस्तस्यस्वविशिष्टहेत्वधिकरणावच्छेदेनतादृशप्रतियोगिताश्रयसामानाधिकरण्यमेव-
वक्तव्यम् तथाच धूमादिसामान्याभावस्यधूमत्वादिनाप्रमेयसामान्याभावानतिरेकेपितदीयंप्रमेयसामान्यनिष्ठंप्रतियोगित्वंस्वन्यूनवृत्ति
नैवधूमत्वधर्मेणावच्छिन्नमतोनतादृशप्रतियोगिताश्रयसामानाधिकरण्यमादायातिप्रसंगइतियुक्तमुत्पश्यामः यत्तुसमनियताभावाना-
मैक्यमतेधूमवान्वह्नेरित्यादावतिव्याप्तिवारणार्थं येनयेनसंबंधेनव्यापकत्वंतैःतैः प्रत्येकंप्रतियोगिसामानाधिकरण्यंविवक्षितं तथाच
व्यभिचारिमात्रएवयत्राधिकरणेव्यभिचारस्तादृशान्यत्वस्यस्वात्मकस्वरूपसंबंधेनापिसाध्यव्यापकत्वात्तदभावस्यचहेत्वधिकरणावच्छे
देनतादृशान्यत्वनिरूपितस्वरूपसंबंधेनप्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिः अतएवविषयीतासंबंधस्यव्यापकताघटकत्वे
पिनित्यज्ञानंनित्यसविषयकत्वादित्यादौनातिव्याप्तिः नित्यज्ञानत्वाद्यभावस्यव्यापकताघटकीभूतसमवायसंबंधेनप्रतियोग्यसमा-
नाधिकरणत्वादितिमतं तत्तुच्छंघटत्वादिनावान्यत्वाद्यभावस्यैवघटत्वादिनायःऽयंपिंडान्यत्वाद्यभावरूपतयातस्यव्यापकताघटकायाः
पिंडान्यत्वनिरूपितस्वरूपसंबंधेनयावद्धेत्वधिकरणेप्रतियोगिसामानाधिकरण्यविरहादेवधूमवान्वह्नेरित्यादावतिव्याप्तिविरहाद्यावत्स

